SHRI SANTOSH KUMAR SAHU
DEPUTY MINISTER
Co-operation, Cultural-Affairs,
Orissa.

"कौमुदी"-पुस्तिकायाः रचयितुः तरुणकवेः प्रबोधकुमारस्य संस्कृत-साहित्य-वर्त्तिनाममूल्यरत्नानां गौरवप्रतिपादनेच्छया समं सरल-सहजबोध्य-संस्कृत-रचनायाः विकाशार्थं प्रयासः प्रशंसनीयः। इतः प्रागेव त्र्यधिकानि पुस्तकानि तेनैव प्रकाशितानि। प्रसिद्ध-भारतीय मनीषिभिः तत्र प्रदत्तानि अभिमतानि मयाऽवलोकितानि। आशासे, पुस्तिकेयं संस्कृत-साहित्य-रसिकैः नूनमादृता भविष्यति पाठकानां सौहार्दं लब्ध्वा कविः प्रतिनव-ग्रन्थ-रचनार्थं प्रेरणां लप्स्यते च।

जयदेव-कवि-रचितस्य सुललित-गीतगोविन्द-काव्यस्य सुकोमल-शब्द-संयोजन-मधुरेण रसाप्लुत-गीतेन प्रतिपुरप्रान्तरं उत्कलस्य मुखरितमस्ति। साधारण-पाठकानां मनसि प्रमोद-हिल्लोलं सञ्जनयति। एतद्व्यतिरिक्तं अद्यापि श्रेष्ठ-देव-

जगन्नाथस्य मन्दिरे पठ्यमानेन गीतगोविन्दश्रवणेन श्रोतृणां मनसि शुद्ध-भक्तिपूत-प्रेम-रसस्यालोड़नं सम्भवतीति । अतीते चापि बहूत्कलीय-कविभिः संस्कृतेन बहुग्रन्थाः विरचिताः । अद्य प्राचीन-संस्कृत-चर्चा-पूत-पीठोत्कलस्य कृति-सन्तानं तरुणकविं तदीय-प्रचेष्टां चापि प्रशस्य हार्दिकं अभिनन्दनं विज्ञापयामि । आशासे, अस्मिन् मार्गे प्रवृत्तः समधिक-ग्रन्थ-रचनार्थं वाग्देव्याः आशीर्वादं लप्स्यते । इति ।

सन्तोषकुमार साहु
९-४-६५

---

## HON'ABLE DR. MUNSHI'S MESSAGE

Bharatiya Vidya Bhawan
Choupathy Road,
Bombay-7
April 7, 1965

Dear Sri P. K. Mishra,

Your letter of March 30 and your booklet entitled 'Santiduta Smaranika' to hand.

I wish you success in your effort to write sanskrtit poems.

Yours sincerely,
(*Sd.*) *K. M. Munshi*

# शुभाशिषः

सदाशिव-संस्कृत-कलेज,
पुरी

उत्कलस्य तरुणकवेः प्रबोधकुमारस्य रचना-'कौमुदी' अहं नितरां आलोकितः। समस्तं भारतमपि तदीय-रचना-लोकनेन समुद्भासितं भवतु इति मम शुभाशिषः सन्तु।

स्वाः अध्यापक श्री वीरहनुमान शास्त्री
एम० ए०, ज्योतिषाचार्यः
तारिका १२-१२-६४

ओड़िशा-ष्टेट-म्युजियम्,
भुवनेश्वरः

पठिता मया तरुणकवेः प्रबोधकुमारस्येयं 'कौमुदी'। इयन्तु हृद्या मनोज्ञा च। आशासे, इयन्तु रसिकसमाजे ज्योत्स्नां विकीर्य्य सफलीभूता भविष्यति।

स्वाः श्री नीलमणि मिश्रः, बि, ओ, एल,
साहित्याचार्य्यः, राष्ट्रभाषा-रत्नः
तारिका १४-१२-६४

# उत्सर्गः

जननि ! ऋङ्कड़पीठवले ! सदा–

सुर-सुरारिगणार्च्चितपादके !

चरणयोस्तव देवि ! नु शारदे !

प्रददतेऽयमिमां तनयस्तव ॥

उत्कलविश्वविद्यालयस्य मुख्यसंस्कृताध्यापकानां

सम्माननीय - गुरुदेव - श्रीयुक्त -

प्रह्लाद प्रधान - महोदयानां

करकमलयोः पुस्तिकेयमुत्सृष्टा

श्रद्धया भक्तितश्च ।

—प्रबोधकुमार—

ॐ श्री शारदायै नमः

# किञ्चित्

सम्माननीया गीर्वाणवाणीचणा विपश्चितः

देवभाषेयं लोकोत्तर-चमत्कारिताविधायिनी, भारतीय-संस्कृतेः सवित्री चेति नास्ति कापि विमतिः। भारतीयं सकल विधकलाकल्पनानां विलास-लीलैकनिलयभूता इति तद्विदां निष्पत्तिः। भाषायामस्यां मे ज्ञानं सीमाबद्धं। तथापि विभिन्नावसरेषु रचितेयं क्षुद्रकवितावलिः विद्वज्जनलोचनातिथितामीयाच्चेत् मादृशः क्षीणमतेः प्रयत्नोऽयं फलेग्रही स्यात्।

पुस्तिकाया अस्याः प्रकाशनाय उत्कलविश्वविद्यालयस्य मुख्यसंस्कृताध्यापकाः श्रीयुताः प्रह्लादप्रधान महाशयाः मामुत्साहितवन्तः। उत्कलविश्वविद्यालयस्य संस्कृताध्यापकाः डक्टर अनामचरण स्वाइँ–श्रीयुक्त सदानन्द रामानुज दास (एम्. ए., साहित्यवेदान्ताचार्य्या) महाशयाः मां समुत्साहितं कृतवन्तः। सर्वेभ्यस्तेभ्यः कृतज्ञतां विज्ञापयामि।

उत्कलस्य प्रतिष्ठिताध्यापकनां श्री वीरहनुमानशास्त्रिपादानां, अध्यापक श्री गौरीकुमार ब्रह्मापादानां, सुसमालोचक नीलमणि मिश्रमहाशयानां, सांवादिक-श्रीयुत भगवान पति-महाशयानां, पूज्य श्री प्राणकृष्ण नन्द महाशयानां (साहित्य एकाडेमी) तथा कृति-सांवादिक-श्री विचित्रानन्द कर महोदयानां

प्रेरणोद्भासितेयं कवितापुस्तिका तेभ्यः हार्द्दिकीं कृतज्ञतां विज्ञापयति । युव-संस्कृताध्यापकेभ्यः श्रीरामचन्द्र त्रिपाठि महाशयेभ्यस्तथा श्रीयुक्त युगलकिशोर शतपथि-श्री केशवचन्द्र मिश्र-श्री अभिरामपण्डा, ( ओड़िशा म्युजियम् ) प्रमुखेभ्यः सुरभारती-रसिकेभ्यः एतेन कृतज्ञतां विज्ञापयामि ।

'ओड़िशा-साहित्य-एकाडेमी'-कर्त्तृपक्षाणां आर्थिकीं सहायतां विना पुस्तिकायाः प्रकाशनं न सम्भवेत् । अतस्तेभ्यः कृतज्ञतां विज्ञापयामि ।

उल्लेख्यं यत्, उत्कलस्य सांस्कृतिकव्यापार-उपमन्त्रिणां श्रीयुक्त-सन्तोषकुमार साहुमहाशयानामनाविलप्रेरणा सर्वथा मेऽविस्मरणीया । अतस्तेऽपि मे कृतज्ञतास्पदम् ।

अत्र सन्निवेशिताभ्यः कविताभ्यः बहु-कविताः 'समाज'-'मातृभूमि'-पत्रिकयोः प्रकाशिता आसन् । एतदर्थं संपृक्त-संवादपत्र-कर्त्तृपक्षा अपि मे कृतज्ञतास्पदमस्मिन्नवसरे ।

परिशेषे राष्ट्रभाषा-समवायंमुद्रणालयस्य सुपरिचालकाः श्री गोपीनाथ साहु महोदया अपि एतदर्थं मे कृतज्ञतास्पदम् ।

सरपड़ा शारदा सदनम्
पो० अ० खण्डसाहो
जिला : कटकम्
३०-३-६५ तारिका

विद्वद्वशंवदस्य
प्रबोधकुमार मिश्रशर्म्मणः

# हे काव्योपम कालिदास !

हे काव्योपम ! कालिदास ! मधुरैः कान्तैः पदैर्भास्वरा ।
रम्या भव्य-सुभाव-भूति-भवनैर्धन्या रसोद्भासिता ।
काव्यश्रीस्तव काव्य-कोविद-वर ! प्रीतिप्रदा सार-दा ।
वाणी-केलि-कला-बिलास-तरला कीर्त्तीः समुद्गायति ॥ १

शप्तो लक्ष्यहतो निज-प्रियतमा-विच्छेद-शोकातुरः ।
'रामाद्रौ' कुटजातिशोभित तनौ कर्मच्युतो वर्षकम् ।
यक्षो वासमसौ चकार वनिता-वक्षोरुहालिङ्गनो-
त्कामी काम-कला-विशारद-कृती तारुण्यसौम्याकरः ॥ २

आषाढ़ाद्यदिने नवीन-जलदं विद्युल्लतोल्लासिनं ।
बालानां दरदं विलोक्य सततं मुग्धो युवा दुःखितः ।
कान्तां काम-शराकुलां कुमुदिनीमिन्दुं विनेव-क्षतां ।
सन्देशं प्रति तां पयोद-सुहृदा प्रेमात्मकं प्रैरयत् ॥ ३

बाला तद्विरहाकुलाऽश्रु-नयना लावण्य-कल्लोलिनी ।
धीराऽधीरगिरा सुधा-रस-कणाः शश्वत् समावर्षिणी ।
लोलालोलसुकुन्तला स्मर-शरैः खिन्ना विभिन्नानना ।
वीणा-तान-रता प्रिय-प्रणयजां गीतिं जगावुच्चकैः ॥ ४

स्वर्गीय-प्रतिभैकमूर्त्त-पुरुष ! स्वर्गीय-दीप्तीश्वर ! 
स्वर्गीय-प्रणय-प्रकाश-मधुरं त्वन्मेघदूतं नवम् ।
विश्वाकाशमहो तनोति नितरामद्यापि वाष्पाकुलं ।
विश्लेष-स्मृति-धूसरञ्च करुणोच्छ्वासैः परंतापि यत् ॥ ५

कवि-कुलोज्वलरत्न ! चिरं तव ।
ललित-भाव-मयी कवितावलिः ।
व्यथितमानस-शान्ति-विधायिनी ।
तव तुलस्त्वमहो धरणी-तले ॥ ६

# जयतु जयदेवः

राधा-माधव-केलि-कौतुक-कला-लोलं रसैराप्लुतं
गोपालि-व्रज-रास-हास-मधुरं पीयूष-संप्लावि वै
नित्यानन्दमयं स्वभाव-मधुरं वैदग्ध्य-संभासितं,
सर्वैः श्रीजयदेव-देव-रचितं गीतं मुदा सेव्यताम् ॥१

सित-यशोव्रजराजि-सुमौक्तिक-
सर-वर-प्रविलम्बित-वत्तस ।
निहत-वैरिक-'गङ्ग'-महीभृतां
नृपसदस्त्वमलंकृतवान् कवे ! २

मधुर-मंजुल-धीर-पदावलि-
ललनया कलयन् सुख-सौरभं ।
नृपमणिर्मंदिरेक्षणया क्षणं
न रमयन् रमणी-गणदुःखदः ॥ ३

---

* उत्कलीय-कवि-जयदेव-पादानां-जन्मस्थाने पुरीजिलान्तर्गते केन्दुविल्वाभिधे (केन्दुली) ग्रामेअनुष्ठितां जयन्तीमभिलक्ष्य लिखितः सभायाञ्च पठित (१९६५)।

कविकुलाब्जप ! ते कवितावलिः
हरिकथा-मधुरा रसकोमला ।
विरहिणी-नयनामृत-हर्षिणी
मनसि कस्य विभर्त्ति न भावितं ॥ ४

विधुकथां ललितां विरहावशा
कुसुम-सायक-चापज-पीड़िता ।
व्रजवरा परिभाव्य विभावरीं
समनयन्नयनाम्बु-कणागणैः ॥ ५

प्रणय-पाश-निबद्धतया हि सा
मुहुरहो नवनीत-सुकोमला ।
व्रजवरेन्द्र-समर्पित-जीविता
विरहमूर्च्छितमाप सकारणम् ॥ ६

पिककलो निशितः स्मरसायकः
मधुप-गुञ्जितमात्म-विनाशकृत् ।
इति तया मधुरामृत-भाषया
रहसि राधिकया समवोचि नु ॥ ७

प्रलपितेन मुहुर्वचसा रसा-
विलुठनातितराऽऽनत-यौवना ।
कमल-मंजुल-लोचन-शालिनी
मधुरिपोश्चतुरां विजगौ कथाम् ॥ ८

प्रणयिनी-प्रणयाकुल-चित्ततां
समनुभूय विदग्ध-हरिस्तदा ।
सपदि बाहु-मृणाल-निबन्धनैः
प्रतिशरं स्मर-शेखरमक्षिपत् ॥ ९

मधुर - रास - रसैस्तदनन्तरं
रवि-सुता-तट-काननमाप्लुतम् ।
इति कथाऽमृत-भाषित-मंजुला
चितितले सुचिरं परिभासते ॥ १०

कविरवे ! हरि-दिव्य-कथामृतं
तव सुनिर्झर-लेखन-निःसृतम् ।
अतिमुदा विनिपीय बुधव्रजो
विबुध-वेश्मसुखं वलते किल ॥ ११

श्रितपदैः कमला-कुचमण्डलाऽऽ-
श्रितहरिं प्रविवर्ण्य कुतूहलम् ।
रसिक-मानस-सारस-कारक
स्त्वमिति माधव-केलि-कथाश्रयिन् ! १२

ललित-कोमल-कान्त-पदावलि-
रस-कला-प्रबलात्मतुषाऽऽगताः ।
तव सुता नव - छन्द - उदाहरै
रभिनवं ननु गीतमथार्च्चिषुः ॥ १३*

सतत-पुण्यमयी महिमावृता
विबुध-वन्दित-वैभव-शालिनी ।
यदियमुत्कलभूर्जननी तव
वयमहो तव गौरव-गर्विणः ॥ १४

प्रसरतु प्रतिभा-प्रभया वचः
प्रतिदिशं रभसं त्रिदश-व्रजः ।
चिर सुधार्णव-मज्जन-पावनोऽ-
वतरताद् नु तवोत्कल-'केन्दुलीम्' ॥ १५

* उत्कलीय-कविकुलतिलकैः जयदेवपादैः यद्गीतगोविन्दं विरचितम्, तद्गीतिछन्दसामनुकरणेन बहु-परवर्त्तिकविभिः गीतिकाव्यानि विरचितानि । तेषां रचनासु इदृक्छन्दो व्युत्पत्तिः, प्रसारक्रमश्च लक्ष्यते सततम् ।

# उत्कलमणि-गोपबन्धु-स्मृतिः

यत्कीर्त्तेर्लतिका हि भारत-वने पुष्पान्विता शोभते ।
सारल्यादि-विशाल-वैभवयुतः कारुण्य-रत्नाकरः ।
सौजन्यैकधनः सतुन्नतमनाः दुःस्थैकचिन्तामणिः ।
सोऽयं दिव्ययशाः पुरन्दर-सभालङ्कारभूतोऽभवत् ॥ १

हे लोकसेविन् ! प्रतिपक्ष-रक्षक !
हे साम्य-मैत्री-प्रतिमूर्त्त-भास्कर !
हे भारती-मंजुल-कुञ्ज-कोकिल !
विलोलमूर्त्ते ! प्रणमामि शाश्वत ! २

* पञ्चत्रिंशत् श्राद्धादवसमभिलक्ष्य लिखिता 'समाज' पत्रिकायां प्रकाशिता च ।

'समाजवादस्य' सुशङ्खगुच्छकैः ।
सुमंजु-तानेन चिरं निनादयन् ।
त्वमेव लोभादिविमुक्तमानसो ।
विशालकृत्यं कृतवान् धरातले ॥ ३

महः प्रदीप्तं तव गौरवोज्ज्वलं
बिमानितां दुर्मति-ताप-तापिनीं ।
अनार्य्यचिन्ता-कुशलि-व्यथातुरां
स्वमातृभूमिं विदधातु लासिनीम् ॥ ४

नन्दन - वन - नव - कोकिल !
कल-चल - नाद-रचनमनुयाहि ।
कोमल - मृदुल - मनोहर -
मंजुल - वचनरचन मतिदेहि ॥
सुर-वर-भवनादेहि ॥ ५

तव नयनोद्गत-स्रोतक-संतति-
विनिहत-शोक-विषादः ।
सुचिरं निखिलोत्कल-जन-जातः
विलपति विनिहितखेदः ।
ममतामय ! नुत-पाद !
हर्षय, वर्षय करुणा-कणिकां
धर्षय दुर्गति-रोधः ॥ ६

# * बालकृष्ण-स्मरणिका



आविर्भावः—
६-४-१८८७
तिरोधानं—
५-८-१९५७

सौभाग्यान्ते विपुल-विभव-स्पर्द्धिते लोभ्यशोभे ।
भव्यः शुद्धस्त्वमिह सकले जन्मदेशे मदीये ।
त्यागस्रोतो विमल-ललितं स्रष्टुमहोऽभवो वै ।
शान्ताकारः सरलवचनो नीति-निष्ठा-वरेण्यः ॥ १

हे सत्यसन्ध ! प्रतिपन्थि-बान्धव !
साहित्य-सेविन् ! करुणा-निकेतन !
आयाहि देवोपम ! जन्मदेशकं ।
विलोलमूर्त्तेऽमर-भा-विभास्वर ! २

---

* उत्कलदेशस्य बरेण्यसाहित्यकानां तथा निर्भीक निष्ठापर-सावादिकानां स्वर्गीय बालकृष्णकर महोदयानां षष्ठवार्षिकश्राद्धदिवसमभिलक्ष्य रचिता ।

कविश्री-

# राधामोहन-गड़नायकः

स्वाधीन-मानस वर ! स्फुटहृत्कलेऽस्मिन् ,
जातीय-जागृति-विनिर्मल-बिन्दु-बन्धून् ।
आमन्त्र्य मन्त्रवदहो कविता - प्रभा - ते
दिव्या सुधा-सरसितं हृदयं व्यतानीत् ॥ १

संग्राम-वाद-परिताप-शुचादि-दूना,
संघर्ष-घात-शतलांछन-खिन्न-भिन्ना ।
त्वल्लेखनी नवयुगस्य चलच्छवेर्यद्
रूपायनं ह्यविकलं सफलं व्यधासीत् ॥ २

कारुण्य-दुःसहमनन्तमचिन्त्यभावं
निर्विण्ण-यक्ष-विरहाश्रु-विपातसिक्तम् ।
'तन्मेघदूत'ममरं मधुरं ह्यनुद्य,
मुग्धोत्कलीय-हृदयं कृतवान् रसालम् ॥ ३

वक्षोऽतुलं प्रविलसत् खलु यो धरण्याः
कृष्ट्वा स्व-शोणित-कणा-नयनम्बुपातैः ।
सृष्टेः सुनायकवरः कृषको विधाता
तत्कृष्टि-हृष्टि-ललिता तव गीति-सृष्टिः ॥ ४

हे वंह्निमन् ! युगनुत ! प्रतिभा-प्रकाश !
जातीय-संहति-विराधित-दम्म-शङ्ख !
सृष्टेर्विचित्र-मलिनात्मकथा-विदग्धा
श्रद्धास्मृता 'स्मरणिका' तव कीर्त्ति-वर्त्तिः । ५

# दशभुजा-स्तुतिः

हे दुर्गे ! मधु-कैटभादिदलिनि ! प्राप्तार्त्ति-शोकापहे !
हे मातर्वर-चण्ड-मुण्ड-दनुज-प्राणानिलाऽऽशोषिणि !
हे चण्डि ! त्रिदशासुरैश्चिरनुते ! शक्रादि संपूजिते !
हे दुर्गे ! नवकोटिविग्रहयुते ! लोकान् हि पाह्यम्बिके !! १

पाश्चात्त्ये परमाणु-युद्ध-विरवश्चित्तेऽति भीतिप्रदः ।
संघर्ष-प्रतिवाद-कौशल-कला-केलिप्रमत्ता जनाः ।
साराल्यं निज-विक्रमातिरहितं सन्यासितामेति वै ।
विज्ञानैर्नव-'सोभिएट'-जनता शक्रालयागामिनी ।। २

भाग्यश्रीर्निज - लोचनागतजलासिक्ता शुचा तापिनी ।
लोकाशा – नव – वल्लरी-सुकुसुमं वारानिधौ मज्जति ।
कौटिल्यं ग्रसते चराचरमदो जिह्वाग्रतः स्वस्य वै ।
देवि ! त्वत्कर - पल्लवैकसहृदं शस्तं ह्यतः कामये ।। ३

'क्रूरचेभः' परमाणुपाणिरनिशं स्वर्धामयातातिगः ।
"विज्ञानेन धरातले विचरितुं शक्ताः सुरा" भाषते ।
'जन्सानः' धन-धान्य-शोभितकरः पौरन्दरीं वीक्ष्य नु ।
पृथ्वीं पार्थ-पितुर्निकेतनमथो कर्तुं समाचेष्टते ॥ ४

शिवे ! हि सर्वाङ्ग-सदा-सरागिणि !
सुरासुराऽऽसेवित - पाद-सारसे !
विलोकयादौ जगदात्मदर्पिभिः ।
प्रभूतमातङ्कितमातातायिभिः ॥ ५

कृपां विधेहि प्रलयैकतारिणि !
शुचाऽति-तप्तान् तनयान् सुरोत्तमे !
करस्थ-शस्त्रेण मनाक् कुरु स्फुटं
विनाशमन्यायगतां कुदर्पिताम् ॥ ६

# शारदीय-स्मरणिका

रम्या लक्ष्मीर्नव-किसलयोल्लासिनी शारदीया !
दिव्यैः पुष्पैरमर-विपिनामण्डनैर्मण्डिताङ्गी ।
भोग्यैः स्निग्धैर्ललित-मधुरैः शब्दितैर्वै द्विजानां ।
मातर्दुर्गे ! दनुजदलिनि ! स्वागतं ते दधाति ॥ १

ओंकाराद्यैर्गगन - मुखरैर्ब्राह्मणाः शुद्धमन्त्रैः ।
विश्वाकारे ! त्रिनयन–मनोहारिणि ! त्वां स्तुवन्ति ।
देवैः सेव्ये ! जननि ! करुणारूपिणि ! शान्तिधात्रि !
रक्षस्वाम्बे ! चपलतनयान् देवि ! नः शोकतप्तान् ॥ २

देशोऽस्माकं सुरपतिनुते 'चैनिको'* विश्वनिन्द्यः ।
भ्रष्टाचारः कुटिल-हृदयो नीति-निष्ठा-विहीनः ।
दर्पोन्मत्तः समर–मुरज-ध्वान-तानं तनोति ।
दुर्गे ! शुम्भ-प्रतिम-चरितं दानवं संहरेमम् ॥ ३

* चैनिकः—चीनदेशीयः

(शिवे !) चालय तव खर्परमतिधर्षय दिति सन्ततिं ।
गर्जय मधुनाशिनि ! ननु सर्जय शम-सङ्गतिम् ।
आनय नव-संहतिम् ॥ ४

( २ )

कात्यायनि ! सुरासुर - वन्दनीये !
जाड्यादि-ताप-परिशोचन-नाश-हेतु !
संभाव्य-शोक-विततां धरणीं विशालां ।
संपालयामलहृदे ! करुणैकमूर्ते ! ५

नेहेरु-शासन-बलेन सुरम्य-शोभा ।
देवैर्नुता मलय-चन्दन-गन्ध-दृप्ता ।
मज्जन्मभूमिरतुला प्रगति-प्रवीणा ।
उच्चारयत्यनिशमम्ब ! सुशान्ति-मन्त्रम् ॥ ६

किन्त्वद्य पाशविक-कर्म-पटु-प्रधानाः ।
विश्वातिनिन्द्य-चरिता दनुजैः समानाः ।
दुष्टाः स्वदेशमधुना खल-चैनिका नः
आक्रम्य हा !! समर-ताण्डवमारभन्त ॥ ७

हे देवि ! ते करयुगात् परमाणु-रेणु-
विस्फोरणं विघटतु प्रति हीनवृत्तीन्।
एतान् कृपैकनिलये ! प्रिय-केलि-भूमिः।
विद्वेषि-मुख्य-निधनाद् भवतात् प्रमत्ता ॥ ८

चण्ड-मुण्ड-नाशिनि ! दिति-सन्तति-कुल-घातिनि !
शोक-ताप-हारिणि ! नव-सख्य-सौख्य-धारिणि !
(जय) सङ्कट-तति-कारिणि ! ६

# दुर्गोत्सव-स्मरणिका

जयतु जयतु जननि !

चर्वर-दारिणि ! दुर्गति-चारिणि !

दुर्मति-नाशिनि ! जननि !

शुम्भ-मधु-महिष-कैटभ-दितिसुत-

विहनन-शोणित-रंजित-भुजशत-

विग्रह-भासिनि ! जननि !

झम्झम्कार-विकार-विमर्दित-

विधुरिपु-वंश-विकासे !

चलदमलेक्षण-संतति-विनिहत-

सकल-विकल-खल-हासे ! १

जागृहि जननि ! जनन-परिरक्षण-

पालन - कारण - हेतुं !

जहि जहि दुर्मद-मद-परिगर्वित-

भावमसुर-कुल-केतु ! २

देशः संप्रति दुर्मति-दुर्नय-

वर - दर - जर्जर - जातः ।

प्रिय जन-पोषण-तोषण-शोषण-

भूपण - नष्टचरित्रः ॥ ३

करुणामल-झर-शीतल-कणिकां

कुरु सुलभां जगदम्ब !

जगदिदमतुलं सुविपुल-कमलं

विहसतु नितरामम्ब ॥ ४

# आह्वानम्

जागृत जागृत लोकाः ।
धन-जन-मान-सुभाग्य-सुशोभित-जननी विरहितशोका ॥

गगन-पवन-घन-गहन-महीरुह-
विहगावलिरतिरागा ।
गायति कोमल-मंजुल-मधुमर-
गीतिमुदञ्चितरागा ॥ १

नौमि पञ्चदश ! जन-गण-वन्दित !
भारत-भाग्य-विधातः !
तव मधुहर्षित ममृतवर्षित-
माप्य लसति जनजातः ॥ २

वन्दे वापुजि ! खिल-जन-लोचन
नन्दन-सुरभित-पुष्प !
क्रन्दितवचनं विरचय कोमल-
हृदय-समुद्गत-वाष्प ! ३

'चीना' गर्जति सृजति पयोधर-
स्तनितमहर्निशमेकम् ।
गुडुम्-गुडुम्-डुम्-ड्म-ड्म-संरव-
ततिरतिजनयतिकोपम् ॥ ४

'लादाख्'-'नेफा'-पदतल मधुना
शोणित-धार-विलोलम् ।
गायति यदिदं वर्वर-'चैनिक'-
पाशव-कर्म विशालम् ॥ ५

गर्जगर्ज युवकुल-सकल ! प्रतिसृज
सृज हि निधनमेषाम् ।
जहि जहि रोषं याहि याहि चिर-
नाशं घटयत तेषाम् ॥ ६

नयशपथं चल विजयायनमनु-
सृत्य युवककुल ! काम्यम् ।
भारत-जननी विहसतु नितरा
मसिवलमाश्रय साम्यम् ॥ ७

---

★ षोड़श-वार्षिक-स्वाधीनतादिवसमभिलक्ष्य लिखितम् ।

# जागृहि परिजागृहि

जागृहि परि-जागृहि वर-
संततिगण ! उन्मदं ।
धारय शित - सायकमिद
मतिधर्षय दुर्मदम् ॥ १

चिरगौरव - रविभासित-
जननी सुखशोभिनी ।
काव्य - कुशलि - गण - वन्दित-
चरणा स्मितहासिनी ॥ २

तुहिनशृङ्ग उन्नततम
उद्धृत इव दण्डधृक् ।
भवति जलद - ड़मृड़मृरव-
संहतिरतिवज्रसृक् ॥ ३

अमरार्चित - चरणाऽर्जित-
गौरव - चिर - सौरभा ।
निहत - वैरि - वीर्य्य - वलय-
धृति - भैरव-विग्रहा ॥ ४

सेयमतुल - कीर्त्ति - कुसुम-
राजित-तनुरुज्ज्वला ।
सुजला चिर - सुफला चिर-
सफला चिरशाद्वला ॥ ५

सुररिपु-सुर - वन्दितपद-
युगला सितहासिनी ।
भव्य - भाव्य - लोभ्य-काव्य-
कवितावलिलासिनी ॥ ६

अयि ! युवकुल ! सरलतरल !
जननी चिरमानिता ।
आह्वयति नु जागृहि जहि
शिथिलभावमर्चिता ॥ ७

धारय करवालमचिर-
मुन्नतिपरभावन !
धर्म - कर्म - शर्म - सौख्य-
सबला भवतात् पुनः ॥ ८
१३।५।६४ तारिका

---

# जागृहि केशरिशाव !

हिमगिरि-गह्वर-कन्दर-कानन-मालाः
आह्वयन्ति निकाम-गर्जित गोलाः ।
जागृहि केशरिशाव !
दुर्दम-वैरि- विजयभरडिण्डिम-
मपसारय मिहिराभ ! १

त्रिदश - रसा - परपारे विरन्चितशब्दः ।
विकलित-मानव- वेदन - कविताऽऽह्लादः
सोऽयमरातिरसाधुः ।
झणझणरणरव - मत्त - पिशाचः
पिवति विजय-नव-सीधुं ॥ २

भारतजननीं संस्कृति - गौरव-माला-
लम्बित-हृदयां निजभुजधर्षित-कालम् ।
सोढुमनर्हश्चण्डः ।
गुडुंम् गुडुम्डुम् - वर्षण - भण्डः
परधन-हारकशौण्डः ॥ ३

गौरवमस्य विशालं परधननाशः
संस्कृतिरितिरमणीया पर-गृह-वासः
विजयो जनगणहत्या ।
वांछिति मानव - दलनैरनिशं
वहतु प्रलय-सुवात्या ॥ ४

जागृहि युवकुल ! दुर्जयमानमसाधुं
संस्कृतिमलिनं धर्षित - भावुक - साधुं
अर्द्ध-विधुं नतु देहि ।
जननी - पद - सरसीरुह - शपथै-
रग्रतः परियाहि ॥ ५

जागृहि वनिताकुल ! कर-कङ्कण मोहं
मुक्त्वा शपथं नय जननी-पद-भागं
काम्योऽराति-विनाशः ।
अथवा वरणं मरणं शरणं
कस्य न करुणापाशः ॥ ६

२९।११।६४ तारिका

# जागृहि युवकुल !

जागृहि युवकुल ! केशरि-विक्रम-शालिन् !
अनुसर जाति-जनक-पद-पातं-दृप्त-हृदयबलशालिन् ॥

झण-झण-शस्त्र-सकलविनिपातक-वैरिणं
कृत - दूषणम् ।
हिम-गिरि-तुङ्ग-सुश्रृङ्ग-विचूर्णित-विक्रमं
हृत - पौरुषम् ॥ १

लोकय 'चनिक' - सैनिक - दैनिक-
पाशव - कृत्यमनाहतम् ।
त्रिदश-विलास-रसा-कृत-वसति-
समर्जित-दनु-सुत-लज्जितं ॥ २

क्रन्दति-भारत-जननी निन्दतिभाग्य-
मतुल - सुख - भावनम् ।
संस्कृति - वैभव - गौरव - सौरभ-
दर्पिणी परपावनम् ॥ ३

यत्पादाम्बुज-युग्म-धौत-सुखिनी गङ्गा चिरंपाविनी,
सीमान्त-प्रतिरक्षितामनुसरेद् हेमाचलः शाश्वतः ।
भाषा-संस्कृति-संहति-प्रतिसरैः वक्षःस्थलं कान्तिमत्,
सेयं विश्व-विकाशदा ह्यभयदा श्रीरूपिणी रोदिति ॥ ४

मुक्त्वा जननी-जनक-तनय-ललना-ममता
पर-भावितम् ।
शोणित-चन्दन-विन्दु-विनिन्दैः दर्शय
शौर्य्यमनाहतम् ॥ ५

श्यामल-वन-तति-संतति-सौरभ-
मोदित-मंजु-समीरणः ।
गायतु भारत-जननी-विजय-पदावलि-
मति कमलायनः ॥ ६

गुञ्जतु भृङ्गावलिरतिसङ्गा चुम्बतु
विलसित-कुसुम-मुखम् ।
गायतु खग-कुल उद्धत-वाचा
"जय-भारत" इति, हसमुखम् ॥ ७

गायतु गङ्गा, तोलित-लहरी-कर-शत-
संहति-शोभिनी ।
भारत-वन्दन-गीतमुदारं
हृतशोचितमतिपाविनी ॥ ८

२९।३।६५ तारिका

# देहि ललाटे चन्दनविन्दुं

देहि ललाटे चन्दन-विन्दुं
जननि ! न ममतां वह हृदये ।
तव पद-धूलिः विमल-पवित्रा
हसतु शिरसि मे वैरि-जये ॥ १

जन्म-भूमिरतिसुफल-सुशस्या
शतदल-कोमल-कान्तिमतीयम् ।
पावयत्यतितरमृजु - सुन्दर -
पद- युगलं सुर - तटनीयम् ॥ २

यस्याः तनया विरहित-शोकाः
निज-भुज - धर्षित - वैरिकुलाः ।
वर्वर-पर-वनिता - नयनामृत -
संतति - धौत - रुधिर-करवालाः ॥ ३

भारत-जननी विश्व - वरेण्या
सज्जन-संस्कृति - रंजित - गात्री ।
धार्मिक-मार्मिक - वेदन-विज्ञा
सा खलु समता-ममता-मूर्त्तिः ॥ ४

उरसि सपदि ममतामयि ! लम्बय
विजय - सुमाल्यमधिकशोभम् ।
रहसि न वहसि मनसि तापं
ममता-चुम्बैः हासय गण्डयुगम् ॥ ५

स्नायुः स्पन्दतु, धमनी-वीणा
गायतु कवितां कर्म-गताम् ।
जागृति-झंकृति-जनित-सरागं,
अस्थि विगायतु विजय-कथाम् ॥ ६

जाड्य-विमर्दन-पटु - करवालं
गर्जतु झण-झण-कार-विकारैः ।
रोमावलिररि - धर्षण - तृप्ता
विहसतु रक्त - कुसुम - हारैः ॥ ७

(मम) भाषा विजयोत्फुल्ला भवतात्,
विजयः पर-पौरुष-नाशः ।
पौरुषं यत् पशुबल-निष्टं
पशुता या 'स्फुटनिक'-युग-भासः ॥ ८

तारिका २४।५।६५ भुवनेश्वरतः

---

# प्रियतम-बापुजि ! वन्दे

प्रियतम-बापुजि ! वन्दे,
तव पद - युगलं वन्दे ॥

'राजघाट'-भुवि तव मर-विग्रह-पांशुः ।
राजति विमल-सुधांशुः ॥

मधुरामृत-भाषण ! तव वाणी शुद्धा ।
'पोष्टर' - सज्जन - बद्धा ॥

लोकय भारत - जननीं साक्षात् पूतां ।
विगलित - लोतक-नेत्राम् ॥

दुर्मति-दुर्मद-दुर्विनीत-दुरासदाऽऽपरिपिष्टां
नय - रहितैरतिनष्टां ॥

तव 'खद्दि'-संतति-परिधृति-जनित-सरागाः ।
विस्मरन्ति विशालजनगणसेवाः ॥

स्वेच्छाचार-विहार-विकारैः मत्ताः ।
नवगण - शासन - हत्या ॥

प्रिय-जन-तोषण-कर्मसु सततं रक्ताः ।
पर-वनिता-वैदेशिक-मद्य-सुभक्ताः ॥
सामाजिक-जीवनधारणमति-संकट-पूर्णं ।
उच्छृङ्खल-नेतृत्व-फलेन विदीर्णं ॥

तव संगठनं विश्व-विशालं नष्टं ।
पुञ्जिवादि - कर - कृष्टम् ॥
तव मधुरामृतवाणी - प्रचरण - धारा ।
संप्रति 'कोटा' - 'परमिट'-सारा ॥

श्रेष्ठा नीतिषु निष्ठा दुर्नय - पिष्टा ।
भ्रष्टाचार - विनष्टा ॥
अयि जन-नायक ! भाग्य-विधायक !, पश्य ।
क्षेत्रे न हसति शस्यम् ॥

पल्ली-जीवनमतितर-विच्युत-सौख्यं ।
विनिहित - कल्मष - पापम् ॥
सामाजिक-वर्त्तनमतिघोरं स्वाद्यं ।
प्रसरतु विप्लव - वाद्यम् ॥

डम्-डम्-कार - विकारैरुद्धत - सर्वः ।
नृत्यतु ताण्डवमपिहित-गर्वः ॥

गर्जतु युवकुल उद्गत-वाष्प-विकाशः ।
सृजतु पयोधर - घोषम् ॥

'मानववाद'- सनातन - सेवक हे !
वैरि - विनाशक हे !

ममता-साम्य-सुसौख्य-विधायक हे !
शोषक-शेषक हे

आयाहि प्रतिभान्वित ! स्मित-निधे !
मैत्री-प्रिय ! प्रोज्ज्वल !

मान्यां भारत - मातरं मृदु - गिरा
चाश्वासय क्रन्दिनीम् ॥

उत्तिष्ठ स्फुट - 'राजघाट' - वसुधां
संदीर्य्य धैर्य्यातुलः ।

स्वेच्छाचारि-करायता नु जनता,
तस्याभवे रक्षकः ॥

तारिका २१।५।६५

# जवाहरलालजी-स्मृतिः

जयतु जवाहर ! धीर !

कोटि-जनविनुत-कान्त-कलाकर-मण्डल-मण्डन ! शूर !

भारतजननीं पर-कर-बन्धन-

रोदनशोचन - दुःखिनीं ।

हत गौरव-हृतगर्व-विजर्जर-

विग्रहामतितापिनीम् ॥ १

वीक्ष्य विशाल विचेष्टक ! जनगण–
मानस - मानस - हंस !
विहितोऽराति-विताड़न-करणे
मातृ–वदन-सित-हासः ॥ २

गत-वैभव-हृत गौरव–लोलुप !
जननी–पद-युग-साधक !
विबुध-नगरतुलरम्य–सुभारत-
भाग्य नियामक ! सेवक ! ३

'शं-शं' शमिति [सकलजनहृदये
सद्योज्वल] ! दरनाशनं ।
सिंचित मृजुतर-चन्दन–विन्दु–
विनिन्दक-शमनय-जीवनम् ॥ ४

'रं-रं'कार-विकार–रुधिर-झर–
जर्जर – वैरि – शरासनं ।
कृतमति सुचतुर ! चञ्चलमतितर-]
'पञ्चशील' - विलेपनम् ॥ ५

हे इस जातेर्महनीय-मौक्तिक !

स्वाधीनता-संयति योग्य-सैनिक !

साहित्य-सौन्दर्य्य-विलास-लोलुप !

सूरोदयारक्तिम - रक्त - सारस ! ५

विश्वात्मिका ते हृदयैकभारती ।

विश्वस्य शोकेन नितान्त-निर्जितः ।

विश्वेषु शान्ति-प्रतिमूर्त्त-पूरुषः ।

विश्वस्थिताः भक्तिपराः पदोस्तव ।। ७

# शोकोच्छ्वासः

त्वन्नेतृतैर्निखिल-धरणी शाश्वतीं शान्ति-गीतिं ।
गीत्वा मोदात् समर-दरहां साम्य-मैत्री-स्वरूपाम् ।
स्वान्ते नृणां प्रतिनव - नवोन्मेषधात्रीं महीष्ठां ।
चिन्तां शुद्धामनयदनघां विश्व - नेतुर्वरेण्य ! १

भव्यींघ्रैव 'स्फुटनिक'-युगे लोक-चित्तं विदुष्टं ।
हिंसा - द्वेषादिभिरनुदिनं तापिनी लोकमाता ।
स्वाद्य-स्नेह - स्रुति-गतिरतिन्यूनतामाप तस्माद् ।
मृत्युर्वै तेऽसमय - घटितो विश्वशान्तेर्विनाशी ॥ २

---

* आमेरिकायुक्तराष्ट्रस्य (U.S.A.) लोकप्रिय-राष्ट्रपतीनां जन् केनेडि-महाशयानां आततायी-कृतमकालमृत्युमुपलक्ष्य रचितः ।

# शरीर-भेदः

गात्रं सुहट्टकमिदं भवनं हि चक्रं ।
वाणिज्यकारिण इहैव चलेन्द्रियाणि ।
क्रेतार एवमतिलोलमनांसि पञ्च ।
द्रव्याणि भूति-विततिर्जन-चित्त-गम्या ।। १

धैर्य्यं धनं ननु विवेक-विशेषता यद् ।
रत्नाकदेव नियतं नव-हट्टकस्व ।
मायामयं जगदिदं परिपश्य मुग्ध !
मुग्ध-प्रबोध-भणितिर्भवताद् भवाय ।। २

---

# मनोज्ञ-कविता

'प्रिय'-लता-वनिता नति-संयता
'ललित'-लोल-मरुत्-परिचुम्बिता ।
विहसतु प्रतिनूत्न – सुपुष्पकै-
र्जगति राग - रसोहि हरि-प्रियः ।।

---